**अथ स्त्रीपुंसयोः केलिर्मणिर्योनिर्मसिर्मुनिः।**
**मरीचिः शाल्मलिः स्वातिः श्रेणिर्मुष्टिस्तिथिः सृणिः ॥ १५ ॥**

"मुष्कोण्डकोषो वृषणः" इत्यमरः। **द्रोणः** भारतप्रसिद्धः स्वनामाख्यातो योद्धृभेदः। भारतप्रसिद्धः स्वनामाख्यातो राजगुरुबौद्धोपासकब्राह्मणवरश्च। वृश्चिकः। मेघभेदः। वृक्षभेदः। आढकचतुष्टयरूपः परिमाणश्च। "अस्त्रियामाढकद्रोणौ" इत्यमरः। "द्रोणोऽस्त्रियामाढके स्यादाढकानां चतुष्टये। पुमान् कृपीपतौ दग्धकाके स्त्री नीवृदन्तरे। तथा काष्ठाम्बुवाहिन्यां गवादिन्यामपीष्यते" इति मेदिनी॥ **गाण्डीवम्**। अर्जुनचापः। चापमात्रञ्च। "कपिध्वजस्य गाण्डीवगाण्डीवौ पुन्नपुंसकौ" इत्यमरः। "गाण्डीवो गाण्डीवश्चाऽस्त्री कार्मुकेऽर्जुनकार्मुके" इति मेदिनी॥ **निगडं** शृङ्खला। लोहमयो हस्तिपादबन्धनः अन्दुकश्च। "अन्दुको निगडोऽस्त्री स्यात्" इत्यमरः॥ **मुकुला** ईषद्विकशितकलिका। "कुड्मलो मुकुलोऽस्त्रियाम्" इत्यमरः॥ **अपरम्** अत्रादिपदात् देहमृणालापणाग्निषादि अन्यच्च। शिष्टसन्दर्भतः शिष्टानां स्थिरबुद्धीनाम्। "न पाणिपादचपलो न नेत्रचपलो मुनिः। न च वागङ्गचपलः" इति शिष्टस्य लक्षणम्। इत्युक्तलक्षणवतां महेश्वरेन्द्रचन्द्रपाणिनिवररुचिप्रभृतीनाम्। सन्दर्भतः काव्यादिरचनाविशेषतः। प्रबन्धविशेषतश्चेति यावत्। "गूढार्थस्य प्रकाशश्च सारोक्तिः श्रेष्ठता तथा। नानार्थकत्वं वेद्यत्वं सन्दर्भः कथ्यते बुधैः" इत्युक्तलक्षणात् सन्दर्भविशेषाद्वा। विज्ञेयं बोद्धव्यम्। विशेषेण ज्ञातव्यमित्यर्थः। पुन्नपुंसकयोः पुँल्लिङ्गे च क्लीबलिङ्गे च पूर्वोक्ताः शब्दगणाः। भवेयुरिति पूर्वेणात्रान्वयः॥ १४॥ इति पुन्नपुंसकलिङ्गसङ्ग्रहः समाप्तः॥ अथ स्त्रीपुँल्लिङ्गसङ्ग्रहमाह॥ अथ अनन्तरार्थद्योतकः॥ **केलिः** परिहासः। क्रीडा। पृथिवी च। "द्रवकेलिपरीहासाः क्रीडा लीला च नर्म च" इत्यमरः। परीहास इत्यत्र परिहास इति च। लीला इत्यत्र खेला इति च क्वचिद्दृश्यते॥ **मणिः** मुक्तादिरत्नम्। "मणिहारावलिरामणीयकम्" इति। "नृपनीलमणीगृहत्विषा" इति च नैषधम्। मृन्मयपात्रभेदः। अलिञ्जरः लिङ्गाग्रञ्च। "रत्नं मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च" इत्यमरः। "मणिः स्त्री पुंसयोरश्मजातौ मुक्तादिकेऽपि च। कण्ठदेशस्तनेऽजाया लिङ्गाग्रेऽलिञ्जरेऽपि च" इति मेदिनी॥ **योनिः** मण्यादीनामुत्पत्तिस्थानमाकरः कारणम्। स्त्रीणामसाधारणचिह्नम्। तद्देवताकं पूर्वफाल्गुनीनक्षत्रञ्च "भगं योनिर्द्वयोः" इत्यमरः। योनिः स्त्रीपुंसयोश्च स्यादाकरे स्मरमन्दिरे" इति मेदिनी॥ **मसिः** पत्रलेखनद्रवम्। कज्जलम्। नीलशेफालिकावृन्तञ्च। अत्र मशिरिति तालुजशाकारान्तपाठोऽपि। **मुनिः** स्थिरचित्तो वीतरागादिश्च। "दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः। वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते" इति गीतायाम्। मन्वत्रिविष्णुहारितादयश्च। "मुनित्रयं नमस्कृत्य" इति बुद्धश्च। "मुनीन्द्रः श्रीघनः शास्ता मुनिः" इत्यमरः। सप्तसङ्ख्या च। "मुनिगुहकार्णवैः कृतयतिवदकोकिलकम्" इति वृत्तरत्नाकरः। तपस्वी च। तपस्वी तापसः पारिकाङ्क्षी वाचंयमो मुनिः" इत्यमरः। "मुनिः पुंसि वशिष्ठादौ वकसेन-

**ऊर्म्मिर्गभस्तिरशनिर्वैपार्ष्णीषुर्धिराशयः ।**
**वस्तिश्च किष्कुः कन्दुश्चरेणुस्तन्वीशिबाहवः ॥ १६ ॥**

तरौ जिने'' इति मेदिनी ॥ मरीचिः किरणः। ''भानुः करो मरीचिः स्त्री पुंसयोः'' इत्यमरः। ''मरीचिर्मुनिभेदे ना गभस्तावनपुंसकम्'' इति मेदिनी । **शाल्मलिः** स्वनामाख्यातो वृक्षः । ''स्थिरायुः शाल्मलिर्द्वयोः'' इत्यमरः । अत्र शाल्मली शाल्मलिः इति द्वयमपि । शाल्मलेर्दीर्घायुष्कत्वात् स्थिरायुः इति वदन्ति । स्थिरमायुर्यस्याः स्थिरायुः। ''षष्टिवर्षसहस्राणि वने जीवति शाल्मलिः'' इति वचनात् ॥ '' शाल्मलिस्तरुभेदे स्याद्द्वीपभेदेऽपि च द्वयोः'' इति मेदिनी ॥ **स्वातिः** अश्विन्यादिषु पञ्चदशमं नक्षत्रम् । सूर्यपत्नीभेदश्च ॥ **श्रेणिः** छिद्ररहिता पङ्क्तिः । ''द्वयोः श्रेणिः सजातिभिः'' इत्यमरः । ''श्रेणिः स्त्रीपुंसयोः पङ्क्तौ समानशिल्पिसंहतौ'' इति मेदिनी ॥ **मुष्टिः** बद्धपाणिः । पलपरिमाणम् । कुञ्च्यष्टभागः । मोषणञ्च । ''मुष्टिर्द्वयोः पले बद्धपाणौ त्सरौ'' इति मेदिनी ॥ **तिथिः** पञ्चदशचन्द्रकलाक्रियारूपा प्रतिपदादिः । पञ्चदशसङ्ख्या च । **सृणिः** शत्रुः । अङ्कुशास्त्रम् । अत्र तालव्यशकारादिश्च । ''अङ्कुशोऽस्त्री सृणिः स्त्रियाम्'' इत्यमरः । ''शृणिरङ्कुशवाची च काशश्च तृणवाचकः'' इति शकारभेदः । ''आरक्षमग्नमवमत्य सृणिः सिताग्रम्'' इति माघः । केचित्त्वत्र सृणिरिति दन्त्यसकारान्तपाठोऽपि माघस्य प्रमादात्सम्भूत इति पठन्ति ॥ १९ ॥ **ऊर्मिः** तरङ्गः प्रकाशः । वेगः । वस्त्रसङ्कोचरेखा । पीडा । उत्कण्ठा । बुभुक्षादयः षट् च । यथा । ''बुभुक्षा च पिपासा च प्राणस्य मनसः स्मृतौ । शोकमोहौ शरीरस्य जरामृत्युषडूर्मयः'' इति । ''ऊर्मिः स्त्रीपुंसयोर्वीच्यां प्रकाशे वेगभङ्गयोः । वस्त्रसङ्कोचरेखायां वेदनापीडयोरपि'' इति मेदिनी ॥ **गभस्तिः** किरणः । सूर्यः स्वाहा । वह्निपत्नी च । ''किरणोस्रमयूखांशुगभस्तिघृणिरश्मयः'' इत्यमरः। ''गभस्तिः किरणे सूर्ये ना स्वाहायान्तु योषिति'' इति मेदिनी । **अशनिः** मेघोत्पन्नः । ज्योतिषम् । वज्रम् । प्रस्तरवर्षी । उल्काविशेषः । विद्युच्च । ''शतकोटिः स्वरुः शम्बो दम्भोलिरशनिर्द्वयोः'' इत्यमरः । ''अशनिः स्त्रीपुंसयोः स्याच्चञ्चलायां पवावपि'' इति मेदिनी ॥ **पार्ष्णिः** पादग्रन्थः । गुल्फस्याधोभागः । पृष्ठश्च । ''पुमान् पार्ष्णिस्तयोरधः'' इत्यमरः । ''पार्ष्णिः स्त्रीपुंसयोः पादमूले स्याद्गुजिनी कटौ'' इति रन्तिदेवः । ''पार्ष्णिः स्यादुन्मदस्त्रियाम् । स्त्रियां द्वयोः सैन्यपृष्ठे पादग्रन्थ्यधरेऽपि च'' इति मेदिनी॥ अत्र वैदशब्दस्तु पादपूरणे स्यात्। ''ऊर्म्मिर्गभस्तिरसनीरैपार्ष्णीषुधिराशयः'' इति क्वचित् पाठः । **इषुः** बाणः । तत्तुल्यसङ्ख्यम् । पञ्चसङ्ख्यान्वितञ्च । ''कलम्बमार्गणशराः पत्रीरोप इषुर्द्वयोः'' इत्यमरः । धिर्ज्ञानभेदः बुद्धिश्च । अत्र ईकारान्तधीशब्दोऽपि । ''धीः प्रज्ञा शेमुषीमतिः'' इत्यमरः । ''धिर्ज्ञानभेदे बुद्धौ च'' इति मेदिनी ॥ **राशिः** धान्यादीनां पुञ्जम् । ज्योतिश्चक्रस्य द्वादशांशो मेषादिः । व्यक्ताव्यक्तगणभेदश्च । ''द्वौ राशी पुञ्जमेषाद्यौ'' इत्यमरः । ''राशिर्मेषादिपुञ्जयोः'' इति मेदिनी ॥ **वस्तिः** नाभेरधोभागः

**गण्डूषगर्जजागर-भुजकीलज्वालवर्त्तकव्रीडाः ।**
**उत्कण्ठशटवराटक-रभसाः स्त्रीत्वे तु टाबन्ताः ॥ १७ ॥**

मूत्राधारस्थानम् । **वासः** वसनदशा च । "वस्तिर्नाभेरधोर्द्वयोः" इत्यमरः । "वस्तिर्द्वयोर्निरूहे नाभ्यधोभूम्नि दशासु च" इति मेदिनी ॥ **किष्कुः** द्वादशाङ्गुलपरिमाणम् । प्रकोष्ठदेशः हस्तपरिमाणञ्च । किष्कुर्हस्ते वितस्तौ च" इत्यमरः । "प्रकोष्ठेऽप्यनपुंसकः" इति रुद्रः ॥ "किष्कुर्द्वयोर्वितस्तौ च संप्रकोष्ठकरेऽपि च" इति मेदिनी ॥ **कन्दुः** स्वेदनीपात्रम् । "कन्दुपक्वं तैलपकम्" इति स्मृतिः॥ तण्डुलादेर्भर्जनपात्रमात्रञ्च । "गोकुले कन्दुशालायाम्" इति स्मृतिः॥ "कन्दुर्वा स्वेदनी स्त्रियाम्" इत्यमरः ॥ **रेणुः** परागः । धूली । पांशुः । पर्पटश्च । "रेणुः स्त्रीपुंसयोर्धूलौ पुँल्लिङ्गः पर्पटे पुनः" इति मेदिनी ॥ **तनुः** देहः । मूर्त्ती । अल्पम् । विरलञ्च । "तनुः काये त्वचि स्त्री स्यात्रिष्वल्पे विरले कृशे" इति मेदिनी ॥ **ईशः** महादेवः । परमेश्वरः । हिरण्यगर्भः । शिवपत्नी च । "ईशः प्रभौ महादेवे" इति मेदिनी ॥ "ईशः प्रभौ शङ्करे स्यादीशा लाङ्गलदण्डके" इति विश्वः । क्वचित् वेणुतन्वीषबाहव इति पाठः ॥ **बाहुः** भुजः । कक्षावध्यङ्गुलिपर्यन्तोवयवश्च । "द्वौ परौ द्वयोः भुजबाहू" इत्यमरः ॥ १६ ॥

**गण्डूषः** मुखपूरणयोग्यं जलम् । "गजाय गण्डूषजलम्" इति कुमारः ॥ करिहस्तम् ॥ प्रसृत्या प्रमितं जलम् । कराङ्गुलिश्च । "गण्डूषो मुखपूर्त्तौ स्याद्गजहस्त्याङ्गुलावपि । प्रसृत्या प्रमितेऽपि स्यात्" इति हैमः ॥ "गण्डूषो मुखपूर्त्तीभपुष्करप्रसृतोन्मिते" इति मेदिनी ॥ **गर्जः** मेघनादः॥ मत्तकरी च ॥ **जागरः** निद्राभावः । जागरणम् । कवचश्च । "जागर्या जागरा द्वयोः" इत्यमरः ॥ **भुजः** बाहुः करः त्रिकोणचतुष्कोणादिक्षेत्रस्थरेखाविशेषः । "तथाऽयते तद्भुजकोटिघातः" इति लीलावती । "अस्त्री द्वौ परौ द्वयोः भुजबाहू" इत्यमरः । "भुजा द्वयोर्बाहौ करे" इति मेदिनी ॥ **कीलः** शङ्कुः । शस्त्रम् । अग्निशिखा । कफोणी । स्तम्भः । लेशश्च । "शङ्कावपि द्वयोः कीलः" इत्यमरः । "कीलोऽग्नितेजसि । कफोणिस्तम्भयोः शङ्कौ" इति हैमः । "कीलो लेशे द्वयोः स्तम्भज्वालाकफोणिशङ्कुषु" इति मेदिनी ॥ **ज्वालः** अग्निशिखा । दग्धान्नम् । दाहश्च । "वह्नेर्द्वयोर्ज्वालकीलौ" इत्यमरः । वर्त्तकः पक्षिभेदः । अश्वखुरश्च । "खुरेऽप्यश्वस्य वर्त्तकः" इत्यमरः। "वर्त्तकस्तु खुरेऽश्वस्य विहगे" इति मेदिनी॥ व्रीडा लज्जा । "मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा" इत्यमरः । तथा रभसकोषे स्त्रीपुँल्लिङ्गशब्दानां निर्देशे । "गण्डूषगर्जभुजजागरहारकीलज्वालाझटारभसवर्त्तकगद्दशङ्काः । व्रीडादयश्च वरटश्च वराटकश्च उत्कण्ठबाणकरकाश्च समामयाश्च" इत्युक्तम् ॥ **उत्कण्ठः** इष्टलाभे कालासहनरूपम् औत्सुक्यम् "उत्कण्ठोत्कलिके समे" इत्यमरः ॥ "चिन्ता तु स्मृतिराध्यानं स्मरणं सस्पृहे पुनः । उत्कण्ठोत्कलिके तस्मिन्नभिध्या तूभयोरपि" इति शब्दार्णवः । **शटः** अम्बलः । सिंहकेशरः । जटा च । "शटा जटाकेशरयोः" इति मेदिनी ॥ क्वचित् शठः सठ इति पाठौ च । **वराटकः** कपर्दः । क्षुद्रवराटः क्षुद्रकपर्दे । स्वार्थे कन् । "वराटकानां दशकद्वयं यत्" इति । हंसवाची

**शल्लको वृश्चिकः कीटः शारस्तूणो घटः कटः ।**
**शफरो वेतसश्चामी स्त्रियां ङ्यन्ताः प्रकीर्त्तिताः ॥ १८ ॥**
**स्त्रीक्लीबयोरुडुर्दामा छर्द्दिर्ज्योतिः सदोऽर्च्चिषः ।**
**सुखं लक्षं वणिज्यश्च वडिशक्रोडपाटलम् ॥ १९ ॥**

वरटशब्दोऽपि पुंस्त्रियोः स्यात् । रभसः वेगः । हर्षः । औत्सुक्यम् । पौर्वापर्याविचारे च । "रभसो वेगहर्षयोः" इति मेदिनी । "रभसो हर्षवेगयोः" इति विश्वः । इमे शब्दाः । स्त्रीत्वे स्त्रीलिङ्गभावे तु । टाबन्ता टाप्प्रत्ययान्ता एवेति ज्ञेयाः । न तु ईबन्ता इत्यर्थः ॥ १७॥ **शल्लकः** त्वक् । भेकः । स्वार्थे कन् । त्वक् । शणवृक्षः । पक्षिभेदश्च । "छत्रादिकाष्टिशरयोः शल्लकी पशुवृक्षयोः" इति मेदिनी ॥ **वृश्चिकः** कीटभेदः । शूककीटः । मेषादितः अष्टमो राशिः । औषधिभेदः । मदनवृक्षः । कर्कटः । गोमयकीटश्च । "वृश्चिकः शूककीटः स्यादलिद्रुणौ तु वृश्चिके" इत्यमरः । "वृश्चिको द्रुण आलिः स्यात्" इति गोपालितः । "वृश्चिकस्तु द्रुणे राशौ शूककीटौषधीभिदोः" इति मेदिनी ॥ **कीटः** कृमिभ्यः स्थूलं क्षुद्रजन्तुमात्रम् । स्वार्थे कन् । मगधजातिश्च ॥ **शारः** कर्बुरवर्णः । वायुश्च । "शारो वायौ स तु त्रिषु । कर्बुरे" इत्यमरः । "शारः स्याच्छैबले वाच्यलिङ्गः पुंसि समीरणे" इति मेदिनी । **तूणः** बाणधारः । स्वनामाख्यातः इषुधिश्च । "तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः" इत्यमरः । "तूणेषुधी उपासङ्गः" इति रत्नकोषः । **घटः** कलसः । परिमाणभेदश्च । "कलसस्तु त्रिषु द्वयोः । घटः कुटनिपावस्त्री" इत्यमरः । "घटः समाधिभेदेभशिरःकूटकुटेषु च" इति मेदिनी ॥ **कटः** हस्तिगण्डस्थलम् । कटिपार्श्वः । नडादिरचितमासनम् । अतिशयः । कालः । तृणम् । शवः । शवरथः । ओषधिः । श्मशानञ्च । "कटः श्रोणौ द्वयोः पुंसि किलिञ्जेऽतिशये शरे । सवये गजगण्डे च" इति मेदिनी ॥ **शफरः** मत्स्यभेदः ॥ **वेतसः** वृक्षभेदः । "अथ वेतसः । रथाभ्रपुष्पविदुलशीतवानीरवञ्जुलाः" इत्यमरः । अमी इमे शब्दाः । स्त्रियां स्त्रीलिङ्गे । ङ्यन्ताः ङीष्प्रत्ययान्ताः । प्रकीर्त्तिताः कथिताः । न टाप्प्रत्ययान्ता इत्यर्थः । इमे शब्दगणाः । स्त्रीपुंसयोः स्त्रीलिङ्गे पुँल्लिङ्गे च । स्युरिति पूर्वेणान्वयः ॥ १८ ॥ इति स्त्रीपुँल्लिङ्गसङ्ग्रहः समाप्तः ॥ अथ स्त्रीनपुंसकलिङ्गसङ्ग्रहमाह ॥ **उडुः** नक्षत्रम् । जलञ्च । "नक्षत्रमृक्षं भं तारा तारकाऽप्युडु वा स्त्रियाम्" इत्यमरः । **दामा** दोहनकाले पशुबन्धनरज्जुः । रज्जुमात्रम् । माला च । स्त्रीत्वे वा टाप् । दामा दामे । "न पुंसि दामसन्दानं पशुरज्जुस्तु दामनि" इत्यमरः । **छर्द्दिः** वमनरोगः । **ज्योतिः** सूर्यः । अग्निः । मेथिकावृक्षः । नेत्रकनीनिकामध्यस्थं दर्शनसाधनं पदार्थः । नक्षत्रञ्च । "ज्वालाभासौ न पुंस्यर्च्चिर्ज्योतिर्भद्योतदृष्टिषु" इत्यमरः । **सदः** सभा । "समज्यापरिषद्गोष्ठीसभासमितिसंसदः । आस्थानी क्लीबमास्थानं स्त्रीनपुंसकयोः सदः" इत्यमरः । अर्च्चिर्वह्न्यादिशिखामयूखश्च । "ज्वालाभासौ न पुंस्यर्च्चिः" इत्यमरः । "अर्च्चिर्मयूखशिखयोर्न ना" इति मेदिनी ॥ **सुखं** पुण्यजन्यो गुणभेदः । सुखकारकम् । आत्मधर्म इति नैयायिकाः । चित्तधर्म इति

**तारकं रसनं नीडमेते टाबन्तकाः स्त्रियाम्।**
**ङ्यन्तास्तु नगरास्थानस्थलानि पाटलं पुरम्॥ २०॥**
**त्रिलिङ्ग्यान्तु प्रतिसरस्फुलिङ्गनखरार्गलाः।**
**कन्दरं शृङ्खलं नालं वल्लूरफलमुस्तकाः॥ २१॥**

साङ्ख्यादयश्च। "सुखं शर्मणि नाके च सुखा पुर्यां प्रचेतसः" इति मेदिनी॥ **लक्षं** दशायुतसङ्ख्या। "लक्षा न पुंसि सङ्ख्यायां क्लीबं व्याजशरव्ययोः" इति मेदिनी॥ **वणिज्यं** वणिज्यकर्म। वाणिज्यमप्यत्र। "वाणिज्यन्तु वणिज्या स्यात्" इत्यमरः॥ **वडिशं** मत्स्यधारणार्थं वक्रलौहकयुक्तः पदार्थः। "वडिशेन झषीरिवास्मान्" इति वृन्दावनचम्पूः॥ **क्रोडम्** अश्वानामुरः। भुजान्तरम्। अङ्कम्। राक्षसः। सूकरश्च। "न ना क्रोडं भुजान्तरम्" इत्यमरः। "क्रोडः शनौ सूकरे ना न पुमानङ्करक्षसोः" इति मेदिनी॥ **पाटलं** स्वनामाख्यातो वृक्षः। तत्पुष्पम्। आशुधान्यञ्च। "आशुर्व्रीहिः पाटलः स्यात्" इत्यमरः। "आशुर्व्रीहौ पाटलो ना श्वेतरक्तेन्यवान्" इति रुद्रः। "पाटलापाटलौ स्त्री स्यादस्य पुष्पे पुनर्न ना। आशुधान्ये पुमान् श्वेतरक्तवर्णेऽपि वाच्यवत्" इति मेदिनी॥ १९॥ **तारकं** नक्षत्रम्॥ **रसनं** जिह्वा॥ **नीडं** स्थानम्। कुलायश्च। "नीडं स्थानकुलाययोः" इति मेदिनी। एते शब्दाः स्त्रियां स्त्रीलिङ्गे। टाबन्तकाः टाप्प्रत्ययान्ताः। स्युरिति पूर्वेणान्वयः॥ **नगरं** पुरम्॥ **आस्थानं** विश्रामस्थानम्। सभा च। **स्थलं** जलशून्यः अकृत्रिमः भूभागः॥ **पाटलम्** आशुधान्यम्। **पुरं** नगरम्। इमे शब्दा अपि। स्त्रीलिङ्गे। ङ्यन्ताः ङीप्प्रत्ययान्ताश्च भवन्ति। इमे शब्दगणाः स्त्रीक्लीबयोः स्त्रीलिङ्गे नपुंसकलिङ्गे च। स्युरित्यन्वयः॥ २०॥ इति स्त्रीनपुंसकलिङ्गसङ्ग्रहः समाप्तः॥ **प्रतिसरः** सैन्यपश्चाद्भागः। हस्तसूत्रञ्च। "ना चमूजवने हस्तसूत्रे प्रतिसरोऽस्त्रियाम्" इत्यमरः। "भवेत्प्रतिसरो मन्त्रभेदे माल्ये च कङ्कणे। व्रणशुद्धौ चमूपृष्ठे पुंसि न स्त्री तु मण्डले। आरक्षे करसूत्रे च नियोज्ये त्वन्यलिङ्गकः" इति मेदिनी॥ **स्फुलिङ्गः** अग्निकणः। अग्निच्युतक्षुद्रांशश्च। "त्रिषु स्फुलिङ्गोऽग्निकणः" इत्यमरः॥ **नखरः** नखः। करजश्च। "पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम्" इत्यमरः। "नखरं पुंसि क्लीबे च नखनं त्रिषु" इति अमरमाला॥ **अर्गलः** कपाटमध्यस्थः रोधकः काष्ठादिदण्डः। सप्तशतीस्तोत्रस्यादिपाठ्यः स्तोत्रविशेषश्च। "अर्गलं कीलकं चादौ पठित्वा कवचं पठेत्। जपेत्सप्तजतीं पश्चात्" इति। कल्लोलः कपाटः। क्षुद्रार्गलश्च। "तद्विष्कम्भोऽर्गलं न ना" इत्यमरः। अर्गला त्रिषु कल्लोलेऽन्तर्दण्डातारयोर्न ना" इति मेदिनी॥ **कन्दरं** गुहाकारं गिरिनितम्बदेशः। गुहा। अङ्कुशः। आर्द्रकञ्च। "दरी तु कन्दरो वा स्त्री देवखातबिले गुहा" इत्यमरः। "कन्दरस्त्वङ्कुशे पुंसि गुहायान्तु नपुंसकम्" इति मेदिनी॥ शृङ्खलं निगडः। लौहमयं पादबन्धनञ्च। "पुंस्कट्यां शृङ्खलं त्रिषु" इत्यमरः। "शृङ्खलापुंस्कटीवस्त्रबन्धे च निगडे त्रिषु" इति मेदिनी॥ **नालं** काण्डः। उत्पलादिदण्डः। मृणालश्च। "नाला मृणालाग्रभुजो भजाम" इति नैषधम्। "नाडी नालञ्च काण्डोऽस्य" इत्यमरः। "नलो न ना पद्मदण्डे नाली शाककदम्बके" इति मेदिनी

**जृम्भश्च टावन्ता एते स्त्रियामथ विभीतकः ।**
**हरीतकाढकतटकवाटाश्च गुणो वटः ॥ २२ ॥**

**वल्लूरः** आतपादिना शुष्कमांसः । सूकरमांसः । वनक्षेत्रम् । वाहनम् । ऊषरभूमिश्च । "उत्तप्तं शुष्कमांसं स्यात् तद्वल्लूरं त्रिलिङ्गकम्" इत्यमरः । "वल्लुर" इति ह्रस्वोकार अप्यत्र । "वल्लूरं स्याद्वनक्षेत्रे गहनोषरयोरपि । वल्लूरा त्रिषु संशुष्कमांससूकरमांसयोः" इति मेदिनी ॥ **फलः** अस्थिखण्डः । नागकेशरः । काष्ठादिपट्टकः । वृक्षादीनां सस्यम् । फलकम् । कार्यञ्च । "फलं जातिफले सस्ये हेत्वर्थे व्युष्टिलाभयोः । त्रिफलायाञ्च कक्कोले प्रियङ्गौ तु फली मता" इति मेदिनी ॥ **मुस्तकः** स्थावरविषभेदः । मुस्ता च । क्वचित् पुस्तके पाठः । "कुरुविन्दो मेघनामा मुस्ता मुस्तकमस्त्रियाम्" इत्यमरः ॥ २१ ॥ **जृम्भः** मुखविकाशः । जृम्भणञ्च । क्वचित् जम्भ इति पाठः । "जृम्भा विकाशजृम्भणयोस्त्रिषु" इति मेदिनी ॥ एते शब्दाः । स्त्रियां स्त्रीलिङ्गे । टावन्ताः टाप्प्रत्ययान्ताः भवन्ति । न तु ङीबन्ता इत्यर्थः । अथशब्दः अनन्तरार्थवाची । **विभीतकः** स्वनामाख्यातवृक्षः । अक्षश्च । "त्रिलिङ्गस्तु विभीतकः" इत्यमरः ॥ **हरीतकः** स्वनामाख्यातः वृक्षः । तत्फलञ्च । स्त्रियां हरीतकी । "हरीतकी हैमवती चेतकी श्रेयसी शिवा" इत्यमरः ॥ "कदाचित्कुपिता माता नोदरस्था हरीतकी" इति वैद्यकम् । **आढकः** सर्वतो दशाङ्गुलमानम् । प्रस्थचतुष्टयपरिमितम् । पुष्कलचतुष्टयमितम् । धान्यमानपात्रम् । षट्पञ्चाशदधिकद्विशतमुष्टिपरिमाणम् । द्रोणस्य चतुर्थभागश्च । "आढकी तु तुवर्य्यां स्त्री परिमाणान्तरे त्रिषु" इति मेदिनी ॥ क्वचित् आटक इति पाठः ॥ तटः कूलं नद्यादेस्तीरम् । "कूलं रोधश्च तीरश्च प्रतीरं च तटं त्रिषु" इत्यमरः । "तटं नपुंसकं क्षेत्रे प्रतीरे तु तटं त्रिषु" इति मेदिनी ॥ कवाटः द्वाररोधकः काष्ठखण्डः । "कपाटी" अप्यत्र । "कवाटश्च कपाटश्च त्रिषु स्यादरं न ना" इति वाचस्पतिः ॥ गुणः धनुषो मौर्विः धनुराकर्षणदामा । रज्जुमात्रं ज्ञानविनयादयश्च । "मौर्व्यां द्रव्याश्रिते सत्त्वशौर्यसन्ध्यादिके गुणः" इत्यमरः । "गुणो मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये । त्यागे शौर्यादिसत्त्वादिसन्ध्याद्यावृत्तिरज्जुषु । शुक्लादावपि वट्यां च" इति मेदिनी ॥ वटः स्वनामख्यातो वृक्षः शणनिर्मितसन्तुश्च । "न्यग्रोधो बहुपाद्वटः" इत्यमरः ॥ २२॥ मण्डलं बिम्बं चक्राकारेण वेष्टनम् । यथा सूर्यमण्डलम् । भूमण्डलम् । चतुःशतयोजनमितो देशभेदः । मण्डलाकारेण विहितः पदार्थः । द्वादशनृपचक्रम् । गोलम् । समूहश्च । "परिवेशस्तु परिधिरुपसूर्यकमण्डले" इत्यमरः । वेष्टने परिवेशः स्याद्भानोः सविधुमण्डले इति रभसः । "मण्डलं परिवेशश्च परिधेश्चोपसूर्यकम्" इति भागुरिः । "मण्डलं परिधौ कोटे देशे द्वादशराजसु । क्लीबेऽथ निवहे बिम्बे त्रिषु पुंसि तु कुक्कुरे" इति मेदिनी ॥ शलभं कीटभेदः पतङ्गश्च । "समौ पतङ्गशलभौ" इत्यमरः । भल्लातकं वृक्षभेदः । "भल्लातकी" अप्यत्र । "वीरवृक्षोऽरुष्करोऽग्निमुखी भल्लातकी त्रिषु" इत्यमरः ॥ कलशः घटः । "कलसः" इति दन्त्यसकारान्तोऽपि । "कलशस्तु त्रिषु द्वयोः । घटः कुटनिपौ, इत्यमरः ॥ कन्दलः कपालः । नवाङ्कुरः । करध्वनिः । अपवादः । कन्दली लतापुष्पम् । कनकम् । युद्धम् । कलापश्च ।

मण्डलं शलभं भ[illegible]तिकं कलक्षकन्दलौ ।
मृणालामलकौ दाडिमश्च ङयन्ताः स्त्रियामिमे ॥ २३ ॥
करणे ल्युट् त्रिषु यथा तस्य व्याख्यान इत्यदः ।
सूत्रकृद्भाष्यकृत्कौसावनुमान इतीच्छति ॥ २४ ॥
इति लिङ्गादिसङ्ग्रहवर्गः ॥
दृष्टप्रयोगा ये शब्दाः प्रायस्त इह कीर्त्तिताः ।
अप्रयुक्तास्तूत्पलिन्यादिदृष्टा अप्युपेक्षिताः ॥ २५ ॥

## इति श्रीपुरुषोत्तमदेवविरचितस्त्रिकाण्डशेषा-भिधानकोषः समाप्तः ॥

"कन्दलं त्रिषु कपालेऽप्युपरागे नवाङ्कुरे । कलध्वनौ कन्दली तु मृगगुल्मप्रभेदयोः" इति मेदिनी ॥ मृणालः पद्मादेर्नालस्थं सूत्रम् । वीरणमूलं च । "मृणाली" इत्यपि । विषतन्तुः । "मृणालं विषम्" इत्यमरः । "मृणालं नलदे क्लीबं पुन्नपुंसकयोर्विषः" इति विश्वमेदिन्यौ । आमलकः वासकवृक्षः । धात्री तिष्यफला । धात्रीफलं च ॥ दाडिमः दाडिम्बवृक्षः । स्त्रियां ङीप्प्रत्ययः । "वियोगिनीमैक्षत दाडिमीमसौ" इति नैषधम् । अत्र "दालिमः डालिमः दाडिम्बः" इत्यपि पाठः । "समौ करकदाडिमौ" इत्यमरः । "दाडिम्बसारपिण्डीरस्वाद्व-म्लशुकवल्लभाः" इति रभसः । "दाडिमस्तु त्रिलिङ्गः स्यादेलायां करके त्रिषु" इति मेदिनी । इमे शब्दाः । स्त्रियां स्त्रीलिङ्गे ङयन्ताः ङीप्प्रत्ययान्ताः स्युरित्यन्वयः ॥ २३ ॥ करणे करण-कारके । ल्युट् ल्युट्प्रत्ययान्तं पदम् । त्रिषु स्त्रीपुंनपुंसकेषु लिङ्गेषु । स्यादिति शेषः। तस्य ल्युट्-प्रत्ययान्तपदस्य । यथा—तस्य व्याख्यान इति "तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः" ( ४, ३, ६६ ) इति अदः पाणिनीसूत्रमुदाहरणं भवति । सूत्रकृत् सूत्रकारकः पाणिनिः । भाष्यकृत् भाष्यकारकः पतञ्जलिश्च इति तौ द्वौ कुशाग्रीयधियौ महाशाब्दिकौ इच्छतः असौ ल्युट्प्रत्ययः त्रिलिङ्गे स्यादिति । साक्षात् दृष्टेर्न गोचरत्वात् अनुमान इति कः इच्छति अभि-लषतीत्यर्थः ॥ २४ ॥ इति लिङ्गादिसङ्ग्रहवर्गः समाप्तः ॥ ९ ॥ अनन्तरं शब्दप्रयोगनियमं दर्शयन्नाह । ये शब्दाः दृष्टप्रयोगाः शिशुपालवधादिषु महाकविकृतेषु, उत्तरीयाणां बौद्धधर्म्म-ग्रन्थेषु, वैदिकग्रन्थेषु च स्वचक्षुषा प्रयोगाः वीक्षिताः । ते शब्दाः प्रायः भूयिष्ठम् । इह अस्मिन् त्रिकाण्डशेषकोषे कीर्तिताः कथिताः । प्रकाशिता इत्यर्थः । ये शब्दाः । अप्रयुक्ताः ऋषिप्रणीतेषु महाकाव्यादिषु, धर्म्मविषयेषु च अप्रयोगीकृताः । उत्पलिन्यादिषु प्राचीनकोषेषु । आदिपदात् अग्निपुराणादिषु पुराणेषु च दृष्टा वीक्षिता अपि । ते शब्दाः । उपेक्षिताः अनपे-क्षिताः औदासीन्या कृता इत्यर्थः । मयेति शेषः । अत्र कोषे महाकाव्यादिषु आगताः शब्दा एव प्रायेण प्रयुक्ता इति भावः ॥ २५ ॥ शिवम् । इत्याचार्यश्रीशीलस्कन्धस्थविरविरचितायां सारार्थचन्द्रिकाख्यायां त्रिकाण्डशेषटीकायां तृतीयः काण्डः समाप्तः ॥

ये शब्दार्णवपारमापुरमलप्रेक्षातरीभिर्बुधास्तान्समनुस्मरामि सततं तेभ्यस्त्वियं न क्रिया । बाला येऽकृतबुद्धयो निजधिया :कोषार्थबोधेऽक्षमास्तानुद्दिश्य हि वाङ्मयेऽभिरुचितावेषा क्रिया मे भवेत् ॥ विख्यातलङ्कापुरिसौधपङ्क्ति–शृङ्गाग्ररत्नच्छुरितोऽभिरामः । वासो यतीनां स्थिरसंयतानां यः शैलबिम्बाभिध आश्रमोऽस्ति ॥ तत्राध्युषन्सज्जनगीतकीर्तिः सद्धर्मविद्या-कृतिलब्धबोधः । तर्कागमालङ्कृतिसाङ्ख्यनीतिच्छन्दःस्वभिज्ञो विबुधावतंसः ॥ श्रीशील-स्कन्धनामा विदितयतिवरोऽसौ व्यधात्पर्यवान्तं षड्भिर्मासैस्त्विमां सत्कविजनहृदयानन्दहेतुं विधात्रीम् । लक्ष्मीशाके[1] ग्रहेन्दुद्विरदशशधरैः[2] सम्मिते कुम्भगेऽर्के लोकोत्तीर्णां समृद्धिं विधदतु सुतरां बालधीसम्प्रवृद्ध्या ॥

**इति सटीकत्रिकाण्डशेषकोषस्य तृतीयः काण्डः समाप्तः ॥**

**शिवमस्तु ॥**

१–लक्ष्मीदास नामकशाके । २–१८१९ तमैः ।

# विज्ञापनम् ।

## सम्प्रति प्रचलितनाम्नां प्राप्ताप्राप्तानां बहूनां कोषग्रन्थानां नामानि बोधकानामनुग्रहार्थमत्र प्रयुक्तानि ॥

## प्राप्तकोषाः ।

| ग्रन्थाः | कर्त्तारः |
|---|---|
| १ नामलिङ्गानुशासनम् | अमरसिंहकृतम् ॥ |
| २ कल्पद्रुः | केशवकृतः ॥ |
| ३ शब्दार्णवः | दुर्गादासकृतः ॥ |
| ४ प्रमाणनाममाला | धनञ्जयकृता ॥ |
| ५ त्रिकाण्डशेषः | पुरुषोत्तमदेवकृतः ॥ |
| ६ हारावली | तेनैव कृता ॥ |
| ७ एकाक्षरकोषः | तेनैव कृतः ॥ |
| ८ द्विरूपकोषः | तेनैव कृतः ॥ |
| ९ द्विरूपकोषः | भरतसेनमल्लकृतः ॥ |
| १० मातृकानिघण्टुः | महीदासकृतः ॥ |
| ११ अनेकार्थध्वनिमञ्जरी | महाक्षपणककृता ॥ |
| १२ अव्ययकोषः | महादेवकृतः ॥ |
| १३ विश्वप्रकाशः | महेश्वरकृतः ॥ |
| १४ शब्दभेदप्रकाशः | तेनैव कृतः ॥ |
| १५ नानार्थमञ्जरी | मेदिनीकरकृता ॥ |
| १६ वैजयन्ती | यादवकृता ॥ |
| १७ लिङ्गविशेषविधिः | वररुचिकृतः ॥ |
| १८ पञ्चतत्त्वप्रकाशः | वेणीदत्तकृतः ॥ |
| १९ नानार्थसमुच्चयः | शास्तकृतः ॥ |
| २० लक्ष्मीनिवासः | शिवरामकृतः ॥ |
| २१ गणितनाममाला | हरिदत्तकृता ॥ |
| २२ अभिधानरत्नमाला | हलायुधकृता ॥ |
| २३ शारदीनाममाला | हर्षकीर्त्तिकृता ॥ |
| २४ अनेकार्थसङ्ग्रहः | हेमचन्द्रकृतः ॥ |
| २५ अभिधानचिन्तामणिः | तेनैव कृतः ॥ |

| ग्रन्थाः | कर्तारः |
|---|---|
| २६ अभिधानचिन्तामणिनाममालापरिशिष्टः | तेनैव कृतः ॥ |
| २७ लिङ्गानुशासनम् | तेनैव कृतम् ॥ |
| २८ अभिधानचिन्तामणिशिलोञ्छः | जिनदेवमुनीश्वरकृतः ॥ |
| २९ मदनपालनिघण्टुः | मदनपालकृतः ॥ |

## अप्राप्तकोषाः ।

| ग्रन्थाः | कर्तारः |
|---|---|
| ३० मुक्तावली | श्रीधरकृता ॥ |
| ३१ रत्नमाला | दण्डाधिनाथोपनामइरुगप्पकृतः ॥ |
| ३२ शब्दसङ्ग्रहनिघण्टुः | अगस्त्यकृतः ॥ |
| ३३ नानार्थसङ्ग्रहः | अजयपालकृतः ॥ |
| ३४ नामसङ्ग्रहमाला | अप्पयदीक्षितकृता ॥ |
| ३५ एकाक्षरनाममाला | अमरसिंहकृता ॥ |
| ३६ प्रयुक्तपदमञ्जरी | कालिदासकृता ॥ |
| ३७ शब्दार्णवः | काशिनाथकृतः ॥ |
| ३८ लघुनिघण्टुसारः | केशवकृतः ॥ |
| ३९ लोकप्रकाशः | क्षेमेन्द्रकृतः ॥ |
| ४० अनेकार्थध्वनिमञ्जरी | गदसिंहकृता ॥ |
| ४१ शब्दमाला | गोपीनाथकृता ॥ |
| ४२ नामावली | गोवर्द्धनकृता ॥ |
| ४३ शब्दसागरः | गोविन्दशर्मकृतः ॥ |
| ४४ शब्दचन्द्रिका | चक्रपाणिदत्तकृता ॥ |
| ४५ अभिधानतन्त्रम् | जटाधराचार्यकृतम् ॥ |
| ४६ निघण्टुः | जैमिनिकृतः ॥ |
| ४७ कोमलकोषसङ्ग्रहः | तीर्थस्वामिकृतः ॥ |
| ४८ गीर्वाणभाषाभूषणम् | त्रिविक्रमाचार्यकृतम् ॥ |
| ४९ नानार्थरत्नमाला | दण्डनाथकृता ( क्वचित्तु भास्करकृतेति ) । |
| ५० नाममाला | दुर्गकृता ॥ |
| ५१ वैष्णवाभिधानम् | देवकीनन्दनकृतम् ॥ |
| ५२ नानार्थसमुच्चयः | धरणीशकृतः ॥ |
| ५३ कविजीवनम् | धर्मराजकृतम् ॥ |

## अप्राप्तकोषाः।

| ग्रन्थाः | कर्तारः |
|---|---|
| ५५ वर्णाभिधानम् | नन्दनभट्टाचार्य्यकृतम्। |
| ५६ राजनिघण्टुः | नरसिंहपण्डितकृतः। |
| ५७ राजवल्लभः | नारायणदासकृतः। |
| ५८ रत्नकोषः | नृसिंहमुनिकृतः। |
| ५९ भूरिप्रयोगः | पद्मनाभकृतः। |
| ६० शीघ्रबोधिनीनाममाला | पुण्डरीकविट्ठलकृता। |
| ६१ वर्णदेशनम् | पुरुषोत्तमदेवकृतम्। |
| ६२ रत्नकोषः | पृथ्वीधराचार्य्यकृतः। |
| ६३ शब्दचन्द्रिका | बाणभट्टकविकृता। |
| ६४ निघण्टुकैकाध्यायः | बाह्लिकेयमिश्रकृतः। |
| ६५ त्रिरूपकोषः | बिह्लणकृतः। |
| ६६ नामसङ्ग्रहनिघण्टुः | भार्गवाचार्यकृतः। |
| ६७ नाममाला | भोजराजकृता। |
| ६८ मङ्खकोषः | मङ्खकृतः। |
| ६९ शब्दरत्नावली | मथुरेशकृता। |
| ७० पदचन्द्रिका | मयूरभट्टकृता। |
| ७१ अनेकार्थतिलकः | महीपकृतः। |
| ७२ शब्दरत्नाकरः | तेनैव कृतः। |
| ७३ एकाक्षरनिघण्टुः | माधवकृतः। |
| ७४ सुप्रसिद्धपदमञ्जरी | मुरारिकृता। |
| ७५ आयुर्वेदपर्य्यायरत्नमाला | रत्नमालाकरकृता। |
| ७६ शब्दार्थनिर्णयः | राक्षसकृतः। |
| ७७ कविदर्पणनिघण्टुः | रामकृतः। |
| ७८ उणादिकोषः | रामशर्मकृतः। |
| ७९ शब्दमाला | रामेश्वरकृता। |
| ८० रूपमञ्जरीनाममाला | रूपचन्द्रकृता। |
| ८१ नाममातृकानिघण्टुः | वरदराजकृतः। |
| ८२ ऐन्द्रनिघण्टुः | वररुचिकृतः। |

## अमातकोषाः ।

| ग्रन्थाः | कर्तारः |
|---|---|
| ८३ कविमञ्जरी | वल्लभकृता । |
| ८४ शब्दरत्नाकरः | वामनभट्टकृतः । |
| ८५ कविदीपिकानिघण्टुः | विक्रमादित्यकृतः । |
| ८६ शब्दार्थचिन्तामणिः | विठ्ठलाचार्यकृतः । |
| ८७ कोषकल्पतरुः | विश्वनाथकृतः । |
| ८८ शब्दार्थकल्पतरुः | वेङ्कटकृतः । |
| ८९ शाब्दिकविद्वत्कविप्रमोदकः | तेनैव कृतः । |
| ९० दशदीपनिघण्टुः | वेदान्ताचार्यकृतः । |
| ९१ संयमिनाममाला | शङ्करकृता । |
| ९२ शिवकोषः | शिवदत्तकृतः । |
| ९३ द्विरूपकोषः | श्रीहर्षकृतः । |
| ९४ श्लेषार्थपदसङ्ग्रहः | तेनैव कृतः । |
| ९५ एकाक्षरनिघण्टुः | सदाचार्यकृतः । |
| ९६ लिङ्गप्रकाशः | सारेश्वरकृतः । |
| ९७ भुवनप्रदीपिका | सार्वभौममिश्रकृता । |
| ९८ शब्दरत्नाकरः | सुन्दरगणिकृतः |
| ९९ अनेकार्थतिलकः | सोमभवकृतः । |
| १०० एकार्थनाममाला | सौभरीकृता । |
| १०१ द्व्यक्षरनाममाला | तेनैव कृता । |
| अविदितग्रन्थनामानि । | विदितकर्तृनामानि । |
| १०२ कोषः | अमरदत्तकृतः । |
| १०३ कोषः | कृत्यकृतः । |
| १०४ कोषः | गङ्गाधरकृतः । |
| १०५ कोषः | चन्द्रगोमिकृतः । |
| १०६ कोषः | तारपालकृतः । |
| १०७ कोषः | दामोदरकृतः । |
| १०८ कोषः | धर्म्मदासकृतः । |
| १०९ कोषः | धोपालितकृतः । |

## अज्ञातकोषाः ।

| अविदितग्रन्थनामानि । | विदितकर्तृनामानि । |
|---|---|
| ११० कोषः | भागुरिकृतः । |
| १११ कोषः | भोगीन्द्रकृतः । |
| ११२ कोषः | मङ्कल ( मङ्गल ) कृतः |
| ११३ कोषः | मार्तण्डकृतः । |
| ११४ कोषः | रन्तिदेवकृतः । |
| ११५ कोषः | रभसपालकृतः । |
| ११६ कोषः | राजशेखरकृतः । |
| ११७ कोषः | राजमुकुटकृतः । |
| ११८ कोषः | रुद्रकृतः । |
| ११९ कोषः | धरणीधरकृतः । |
| १२० कोषः | वाग्भटकृतः । |
| १२१ कोषः | सर्व्वधरकृतः । |
| १२२ कोषः | वाचस्पतिकृतः । |
| १२३ कोषः | राजदेवकृतः । |
| १२४ कोषः | वामनकृतः । |
| १२५ कोषः | मुकुटकृतः । |
| १२६ कोषः | विक्रमादित्यकृतः । |
| १२७ कोषः | विश्वरूपकृतः । |
| १२८ कोषः | भट्टमल्लकृतः । |
| १२९ कोषः | व्याडिकृतः । |
| १३० कोषः | विश्वविलोचनकृतः । |
| १३१ कोषः | शुभाङ्ककृतः । |
| १३२ कोषः | सोमनन्दीकृतः । |
| १३३ कोषः | सज्जनकृतः । |
| १३४ कोषः | साहसाङ्ककृतः । |
| १३५ कोषः | हट्टचन्द्रकृतः । |
| १३६ कोषः | हरकृतः । |
| १३७ कोषः | कात्यायनकृतः । |

## अप्राप्तकोषाः ।

विदितग्रन्थनामानि ।

१३८ अमरमाला
( केचित्तु अमरसिंहकृतेऽति वदन्ति )
अग्रे कर्तृनामान्यविदितानि वर्तन्ते ।
१३९ असालतिप्रकाशः
१४० आनन्दकोषः
१४१ एकवर्णसङ्ग्रहः
१४२ एकाक्षरकोषः
१४३ उत्पलिनी
१४४ ऊष्मविवेकः
१४५ अजयः
१४६ अरुणः
१४७ इन्दुकोषः
१४८ कल्पतरुकोषः
१४९ ग्रहाभिधानम् ( दैवज्ञमुखमण्डनम् )
१५० जकारभेदः
( बाणभट्टकृत इति वदन्ति )
१५१ दण्डिकोषः
१५२ सुभूतिकोषः
१५३ धन्वन्तरिनिघण्टुः
१५४ नक्षत्राभिधानम्
१५५ देशीकोषः
१५६ नानार्थमञ्जरी
१५७ नामनिधानम्
१५८ पद्मकोषः
१५९ भुम्नकोषः
१६० चकारभेदः
१६१ बीजकोषः
१६२ बृहदमरकोषः
( अमरसिंहकृत इति वदन्ति )

विदितग्रन्थनामानि ।

१६३ महाखण्डनकोषः
१६४ पदरत्नावली
१६५ राजकोषनिघण्टुः
१६६ पुद्गलकोषः
१६७ लिङ्गप्रकाशः
१६८ मुनिकोषः
१६९ वर्णप्रकाशकोषः
१७० पालकोषः
१७१ वात्स्यायनकोषः
१७२ कोषसारः
१७३ शब्दतरंगिणी
१७४ गङ्गाधरः
१७५ शब्ददीपिका
१७६ गोवर्द्धनकोषः
१७७ शब्दरत्नसमुच्चयः
१७८ शब्दसारनिघण्टुः
१७९ चन्द्रकोषः
१८० संसारावर्तः
१८१ चरककोशः
१८२ सकलग्रन्थदीपिका
१८३ सकारभेदः
(बाणभट्टकृत इति वदन्ति)
१८४ सञ्जीवनी
१८५ सन्मुखवृत्तिनिघण्टुः
१८६ सरसशब्दसरणिः
१८७ सरस्वतीनिघण्टुः
१८८ साध्यकोषः
१८९ रत्नकोषः
१९० सारस्वताभिधानम्
१९१ हनुमन्निघण्टुः
१९२ सिद्धौषधनिघण्टुः

भूयिष्ठमप्राप्तेषु एतेषु निघण्टुकोषादिषु सिद्धौषधनिघण्टुः सरस्वतीनिघण्टुर्दैवज्ञमुखमण्डनमित्येते त्रयो ग्रन्थाः लङ्काद्वीपे सिंहलाक्षरैर्मुद्रिताः सन्ति । अवशेषा अपि कोषग्रन्थाः सम्प्रति सन्तीति श्रूयत एव । यद्येतर्हि भारतदेशे वा लङ्कादेरन्यत्र वा येषां केषाञ्चित्सकाशे वा प्राचीनेषु नवीनेषु पुस्तकालयेषु वा एते निघण्टुकोषादयः सन्तु तैः श्रीमद्भिर्लोकोपकृतये ते सम्प्रति मुद्रणीयाः प्रकाशनीयाश्च । अत्र तु केषाञ्चित् पुस्तकानां नामानि पुनरुक्तानि वा संदिग्धानि वा सन्तीति मन्ये । शिवम् ॥

श्रीशीलस्कन्धयतिवरस्य ॥

# शब्दानुक्रमणिका ।

# शब्दानुक्रमणिका ।

# शब्दानुक्रमणिका ।

# शब्दानुक्रमणिका ।

# शब्दानुक्रमणिका ।

## शब्दानुक्रमणिका ।

# शब्दानुक्रमणिका ।

## शब्दानुक्रमणिका ।

# शब्दानुक्रमणिका ।

# शब्दानुक्रमणिका ।

# शब्दानुक्रमणिका ।

# शब्दानुक्रमणिका ।

# शब्दानुक्रमणिका ।

## शब्दानुक्रमणिका ।



इति त्रिकाण्डशेषकोशस्याकारादिक्रमानुक्रमणिका समाप्ता ।

---

पुस्तक मिलनेका ठिकाना—

**खेमराज श्रीकृष्णदास,**

"श्रीवेङ्कटेश्वर" स्टीम्-प्रेस-बंबई.

# क्रय्यपुस्तकें ( कोशकाव्यादि-ग्रन्थाः )।

| नाम. | की. |
|---|---|
| **अमरकोष-मूल**-छोटे अक्षरका गुटका ... ... ... ... ... | ।) |
| **अमरकोष**-सटीक ... ... ... ... ... ... ... | १) |
| **अमरकोष**-भाषाटीकासमेत। शब्दानुक्रमणिकासमेत। ग्लेज... ... ... ... | १॥) |
| ,, तथा रफ कागज ... ... ... ... ... ... ... | १।≈) |
| **अनेकार्थध्वनिमञ्जरी**-भाषामें सुगमहै... ... ... ... ... ... | ≈) |
| **भावीनाममाला**-( छन्दबद्ध भाषाकोष ) इसको जोधपुर निवासी रामसनेही साधु भावनदासजी महाराजने विशेष कर अमरकोष तथा हैम-विश्व-व्याडि-धरणि-मेदिनी आदि अनेक कोषोंका सार लेके अपूर्व ग्रंथ बनाया है। इसमें संस्कृत तथा भाषामें प्रचलित प्रायः सभी शब्द आयेहैं... ... ... ... ... ... ... ... | १) |
| **अमरुशतक**-शृंगार और वेदान्तपर काव्य टीकासहित ... ... ... ... | ॥≈) |
| **अश्वधाटीकाव्य**-भाषाटीकासमेत .... ... ... ... ... ... | ≡) |
| **ऋतुसंहारकाव्य**-कालिदासकृत और चौरकविकृत-चौरपञ्चाशिकाकाव्य इसमें षड्ऋतुवर्णनादि राजकुमार बाबू देवनंदनसिंहकृत छन्दोबद्धभाषाटीकाहै... ... ... ... | ।≡) |
| **कामाक्षिस्तुतिशतक**-मूककविविरचित ... ... ... ... ... | ।) |
| **किरातार्जुनीयकाव्य-सटीक**। ग्लेज कागजका दाम ... ... ... ... | १।।।) |
| ,, तथा रफ कागजका... ... ... ... ... ... | १॥) |
| **कुमारसम्भव**-महाकवि कालिदाकृत और मल्लिनाथकृत संजीवनीटीकासमेत ... ... | १।) |
| **कृष्णलीलामृतकाव्य** ... ... ... ... ... ... ... | ।~) |
| **कृष्णकर्णामृतकाव्य**-( बडाही भक्तिमयहै ) ... ... ... ... ... | ।) |
| **कार्ष्णिकण्ठाभरण**-कार्ष्णिगोपालदास विरचित। नरोत्तमीयटीका तथा अमरेश्वरीय टिप्पणीसहित ... ... ... ... ... ... ... | ।~) |
| **गीतगोविन्द-राधाविनोदसमेत**-भाषाटीकासहित। इसमें जयदेवगोस्वामिकृत अतिललित संस्कृतमें रागमय राधाकृष्णकी प्रेममयभक्तिकी गानेकी चीजें विद्यमान हैं ... ... | १) |
| **गीतगोविन्द**-मूलमात्र ... ... ... ... ... ... ... | ≤ |
| **गुरुपीयूषलहरी**--गुरुनानकसाहबका वर्णन ... ... ... ... ... | |
| **घटकर्परकाव्य**-भाषाटीकासमेत ... ... ... ... ... ... | |
| **दशकुमारचरित्र**-( संस्कृत ) ... ... ... ... ... ... | |
| **नलोदयकाव्य-सटीक**-इसमें महाराजा नल और दमयन्तीका रोचक चरित्र वर्णित है ... | |
| **पद्यमुक्तावलि**-इसके श्लोकोंके आदिमें क्रमसे स्वर व्यंजनोंके अक्षर आतेहैं। यद्यपि छोटाहै किन्तु देखने योग्य है... ... ... ... ... ... ... | |
| **पञ्चतन्त्र-मूलमात्र**। विष्णुशर्माकृत नीतिशास्त्र... ... ... ... ... | |
| **पञ्चतन्त्र**-विष्णुशर्माकृत और पं० ज्वालाप्रसादजीमिश्रकृत सुबोध भाषाटीकासमेत ... | |
| **भर्तृहरिशतक**-नीति, शृंगार तथा वैराग्य भाषाटीका समेत। ... ... ... | |
| **भक्तिरत्नावली**-श्रीमद्भागवतोद्धृत स्तुतिसंग्रह ... ... ... ... ... | |

| नाम. | की. |
|---|---|
| **भामिनीविलास**-पं० महावीरप्रसाद द्विवेदीकृत भाषाटीकासहित । इसमें-प्रस्ताविकविलास, शृंगारविलास, करुणाविलास, तथा शान्तविलासादिअत्यन्त रोचकविषय हैं पंडितोंके देखने योग्य है. ... | १) |
| **भोजप्रबन्ध-मूल** । कविवल्लालकृत । इसमें भोजराजाका चरित्र राजनीतिसंबंधी भली भाँति वर्णितहै. ... | ।≡) |
| **भोजप्रबन्ध**-पं० श्यामसुन्दरलाल त्रिपाठीकृत भाषाटीकासमेत ... | १) |
| **भोज और कालिदास**-भाषाटीकासमेत। राजा भोज और कालिदासकी चातुर्य्यकी उत्तमोत्तम कथाका संग्रह हैं ... | ॥=) |
| **भङ्गाभङ्गनिषेध**-भाषाटीकासमेत । इसमें भांगकी निंदाका खंडन भलीभाँति कियाहै ... | =) |
| **मारुतीस्तव-सटीक** । जोधपुरनिवासी नित्यानन्दशास्त्रीजीने हनुमानूजीकी लोकोत्तरमहिमाको ललितपद्योंमें वर्णन कियाहै ... | ।-) |
| **मूर्खशतक**-भाषाटीकासमेत... | -) |
| **मेघदूतकाव्य**-सटीक ... | ।=) |
| **मेघदूतकाव्य**-कालिदासकृत सान्वय मल्लिनाथी टीका और भाषाटीकासमेत । इसमें मेघका वर्णन अवलोकन करनेयोग्यहै ... | ॥) |
| **रघुवंशमहाकाव्य-कालिदासकृत**-मल्लिनाथकृत संजीवनी टीका और टिप्पणीसमेत । इसमें राजादिलीपसे लेकर लव-कुश तथा अग्निवर्णके चरित्रतक १९ सर्ग हैं । इसकी महिमा कौन नहीं जानता ? विद्यार्थियोंको परमोपयोगी है पक्की जिल्द ... | १॥) |
| ,, तथा सादी जिल्द. ... | १।) |
| **रघुवंशमहाकाव्य-सटीक** तथा **रामकृष्णाख्यविलोमकाव्य सटीक**-ये दोनोंका एक गुटकाहै महीन अक्षर.... | ॥=) |
| **रघुवंशमहाकाव्य**-विद्यावारिधि पं० ज्वालाप्रसादजीमिश्रकृत सान्वय भाषाटीका पदयोजना तात्पर्यार्थ और सरलार्थसहित ग्लेजकागज. ... | ३॥) |
| ,, तथा रफ कागज ... | ३) |
| **रघुवंशमहाकाव्य**-( केवल पाँच सर्ग ) उपरोक्त अलंकारोंसे युक्त भाषाटीकासमेत । ... | १।) |
| **रघुवंशमहाकाव्य**-सटीक सर्ग १ से ५ तक ... | ।) |
| **रघुवंशमहाकाव्य**-सटीक सर्ग ६ से १० तक ... | ।) |
| **राक्षसकाव्य**-संस्कृतटीका और भाषाटीकासहित ... | =) |
| **रामकृष्णविलोमकाव्य**-संस्कृतटीकासमेत ... | ।) |
| **राधाविनोदकाव्य**-भाषाटीकासमेत ... | =) |

संपूर्ण पुस्तकोंका बडा सूचीपत्र अलग है मँगालीजिये.

पुस्तक मिलनेका ठिकाना-

**खेमराज श्रीकृष्णदास,**

"श्रीवेङ्कटेश्वर" स्टीम्-प्रेस-बंबई.